वर्णसाधारणत्वादिति सूत्रयोजनापि सूपपादा । न चैव शूद्रस्याप्याधान शङ्क्यम् 'अध्वराणा जनयथ पुरोगाम्' 'दर्शमह पूर्णमास यज्ञ यथा यजै' इत्यादिमन्त्रवर्णत आधानस्य यज्ञार्थत्वावगमात् 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्त' इति तस्य यज्ञनिषेधाच्छूद्रस्याध्ययननिषेधात् '**न स्त्रीशूद्रौ वेदमधीयाताम्**' इति तस्य विद्याप्रतिषेधाच्चेति । अत्र वय ब्रूम —यान्यत्र याज्ञिकोदाहरणानि दृश्यन्ते तानि विधायकानि न भवन्ति । तैत्तिरीयं वाक्य तु तैत्तिरीयारण्यके श्रुत तत्तु मतवैचित्र्यप्रस्ताव उदाहृतम् । विधिसरूपार्थवाद इति अनन्यगतिका व्यवस्था । अन्यदपि तत्र यच्छब्दस्य सत्त्वान्न विधायकम् । तदुक्तम्—न्यायसुधायाम्—

सिद्ध स्योतनाद्वक्त्राभिमुख्यासमत्वाद्विधौ ।
आम्नाने प्रेरणाभावान्निमित्तत्वाभिधानत ॥ १ ॥
विधिशक्तिरिह तु स्याद्यच्छब्दादिचतुष्टयम् ।
प्रात्ययोगे तु तद्बाधात्क्वचित्स्यादविह तृता ॥ २ ॥ इति ॥

पार्थसारथिमिश्रा अप्याहु —

न तावत्क्रतुसामर्थ्यात्प्राप्तिरैकान्तिकी तयो ॥
सामान्यवचन यत्तद्वर्तमानापदेशकम् ॥ १ ॥

यत्तु समरणकाण्डे श्रुतमिति तदपि तत्र न पश्याम । स्थितेऽपि अर्थवादघटितत्वात्तत्रापि निर्दिष्टैव गति । अयास्तु याज्ञिकमते प्रपञ्चिता युक्तय समीचीना इति विभाव्य आधानविधिर्मीमासाया भगवद्भाष्यकारमतानुसरणमेव युक्तमिति पश्याम. । यत्र तु अनन्यगतिर्नामान्यत्र विधायकत्व नास्ति तत्र तु सत्यपि यच्छब्दे विधायकत्वमनश्यमभ्युपेतव्यम् । यथा—'यदाग्नेयोऽष्टकपालोऽमावास्यायाम्' 'यदाहवनीये जुहोति' 'यत्पर्णशाखया वत्सानपाकरोति, इत्यादिस्थलेषु । इति श्रौतिप्रवराणा मीमासकाना च नानधिगतचरम् । इत्यलमतिपल्लवितेन ॥

"वर्षासु रथकारोऽग्निमादधीत" ॥
वचनाद्रथकारस्याधानस्यासर्वशेषत्वात्" जै ६।१।१२

सूत्रार्थ —वचनाद्रथकारस्येदमाधान तथास्याधानस्य सर्वत्रैवर्णिकाधानापेक्षया पारिशिष्ट्यादत्रैवर्णिकरथकारस्यैवेदम् ॥

वर्षा रथकारस्य । आप श्रौ. सू ५ । ३ । १८
ये त्रयाणा वर्णानामेतत्कर्म कुर्युस्तेषामेष काल ॥ ५।३।१९

मीमासा—" वर्षासु रथकारोऽग्निमादधीत " इति । तत्किं ब्राह्मणादीनामेव रथकरणे निमित्त वर्षाविधिरयमुत रथकारसञ्ज्ञस्यानान्तरवर्णस्याधानान्तरविधानमिति सशये द्विजाना

विद्वत्ताकालमात्रविधाने च साधनान्तराभावेन कालविधिर्नाविदुषोऽवान्तरवर्णस्य विशिष्टाधानविधिरिति प्राप्ते रूढिबलेन योगबाधाद्वचनबलाच्चाविदुषोऽप्यधिकारप्रतीतेरभिधानात् । ऋभूणां त्वेति च मन्त्रवर्णादृभुसौधन्वनपर्यायस्यावान्तरवर्णस्य रथकारस्येदमाधानं विधीयते ।

आपस्तम्बाचार्यसूत्रविरोधो जैमिनिसूत्रेण—तस्य सूत्रस्यायमर्थः—त्रिषु वर्णेष्वन्तर्भूता एव स्ववृत्तिकर्शिता ये रथं कुर्वन्ति तेषामयमाधानकालः । रथकाराधानं क्षत्रियसंस्कारार्थं न भवति रथकारस्याधाने सद्भावेऽपि आधानमात्रोपक्षीणेनाधानविधिना क्रतुविधानकल्पनासंभवादिधामावेनोत्तरकल्पविकारानुपपत्त्याग्नीनां भाव्युपयोगराहित्येन संस्कारानर्हत्वात् । नहि प्रमाणवदस्माभी रथकारस्य क्रत्वधिकारोऽङ्गी क्रियते । तस्माद्ग्निगुणकमर्थकर्मेदमाधानम् । तच्च स्वर्गफलकम्-तैरग्निभिर्दाहश्च तस्येति मीमांसकाः ।

अप्यवर्णत्रयेषु क्षत्रियवैश्योपकृष्टाः । आप. श्रौ. सू. २।१।११

अस्य सूत्रस्य विवरणसमये गार्ग्यनारायण इत्थं व्याचख्यौ । वैश्यस्तत्कर्मोपजीवी उपकृष्ट इत्युच्यते । अयमुपकृष्टशब्दार्थ आपस्तम्बसूत्रमनुसरति । तेनापस्तम्बाश्वलायनमते वर्णत्रयाद्बहिः क्रत्वधिकारिणो न सन्तीति सुविदितम् ।

तदत्र भगवान् कात्यायनोऽप्यसूसुचत् । यथा—

रथकारस्याधाने ॥ ९ ॥ रथकारस्याधानेऽग्न्याधेयकर्मण्यधिकारो भवति । वर्षासु रथकार आदधीतेति श्रुतेः । अत्रेदं संदिह्यते । किं त्रैवर्णिकानामन्यतमो रथकरणयोगाद्रथकार आहोस्विन्नियतं किंचिज्जात्यन्तरमिति । किं तावत्प्राप्तम् । त्रैवर्णिकानामन्यतम एवेति । कुतः सोऽपि हि रथं करोतीति योगाद्रथकार इत्युच्यते । तस्य च त्रैवर्णिकत्वादाधानं प्राप्तमेव ऋतुमात्रं विधेयम् । तथा सत्येकार्थविधानाद्वाक्यभेदो न भवति लाघवं च । जात्यन्तरपक्षे तु तस्याधानं विधातव्यम् । ऋतुश्चान्यश्च । तथा सति वर्षास्वादधीत रथकार आदधीतेत्येवं वाक्यभेदः स्यात् । अपि च शूद्रत्वसामर्थ्यात्प्रतिषिद्धः । तस्मात्त्रैवर्णिकानामन्यतम एवेति पूर्वः पक्षः । सिद्धान्तमाह—

नियतं च ॥ १० ॥ चो वार्थे वाशब्दश्च पूर्वपक्षनिरासार्थः । न त्रैवर्णिको रथकारस्तस्य शिल्पोपजीवनस्य प्रसिद्धत्वात् किं तु नियतं जात्यन्तरमेव । तत्र केचिदेवमाहुः—वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः शूद्रायां वैश्यादुत्पन्ना करणी तस्यां करण्यां माहिष्यादुत्पन्नो रथकार इति । तदुक्तं स्मृतौ—माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात् । शूद्रायां करणी वैश्यादिति । याज्ञवल्क्योऽपि [ १-९२ ] वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ । वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः । विन्नासु त्रिविधा परिणीतासु । तथा [ १-९-९ ] माहिष्येण करण्यां तु रथकारः प्रजायत इति । अतो रथकारशब्द एवंविधसंकरजातौ रूढः । रूढिश्च योगाद्बलीयसीति न्यायाद्रथं करोतीति योगं बाधित्वा जात्यन्तरमेव रथकारशब्देनोच्यते । तस्येदमाधानं कालविशिष्टं विधीयते विशिष्टविधानाच्च वा-

मयभेदोऽपि न भवति । अपरे त्वाहुः—रथकारशब्देनात्र सौधन्वनानां ग्रहणम् । ऋभूणां त्वेत्याधानमन्त्रवर्णात् [ ४-९ ५ ] सौधन्वनाश्च ऋभवः ' सौधन्वना ऋभव' इति [ ऋक्संहिता [ ३-६०-४ ] सामानाधिकरण्यनिर्देशात् । तथाचाह मनुः'' [ १०-२३ ] व्रात्यात्तु जायते वैश्यात्सुधन्वाचार्य एव च । कारुषश्च विजन्मा च मैत्रः सात्वत एव चेति । अतो मनूक्तो यः सुधन्वा व्रात्यवैश्यपुत्रस्तत्पुत्राणां सौधन्वनानामृभूणामेवात्राधिकारः । यस्तु याज्ञवल्क्येनोक्तो न तस्याधिकारः सत्यपि रथकारशब्दवाच्यत्वे मन्त्रवर्णाच्छागन्यायेन सौधान्वनानामेवाधिकार इति । तथाच जैमिनिः ( ६ । १ । ४६ ) सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात्प्रतीयेरन्निति सौधन्वना नाम जातिः । हीनास्ते किंचित्त्रैवर्णिकेभ्यो जात्यन्तरम् । नच ते शूद्रा न वैश्या न क्षत्रिया न ब्राह्मणा इति तेषामिदमाधानम् । कथम् । प्रसिद्धेर्मन्त्रवर्णाच्च मन्त्रवर्णो हि भवति सौधन्वना ऋभव इति ऋभूणां त्वेति ( ४ । ९ । ५ ) च रथकारस्याधानमन्त्रः । तस्मात्सौधन्वना ऋभवश्च रथकारा अपि च तं नेमिमृभवो यथेति च ये नेमिं नमन्ति त ऋभव इत्युच्यन्ते रथकाराश्च नेमिं नमन्ति तस्मादत्रैवर्णिकानामशूद्राणामेतदाधानमिति शवरस्वामिनः । ननु विद्याभावेन सौधन्वनानामसमर्थतयानधिकारात्त्रैवर्णिक एवानयाव्युत्पत्त्या रथकारशब्देन किमिति न गृह्यते सोऽपि हि रथकारो भवति तस्य चाधानं प्राप्तमेवानूद्य ऋतुमात्रविधानाल्लाघवं भवति जात्यन्तरे तु विशिष्टविधानाद्गौरवं स्यादित्याशङ्कायामुत्तरमाह—

नाम्नायादिति वात्स्यः ॥ ११ ॥ वात्स्य ऋषिरित्याह न त्रैवर्णिको रथकारः । कुतः, अभावात्, त्रैवर्णिकस्य रथकारस्याम्नानात्कथमभावो यौगिकोऽयं शब्दो रथं करोतीति रथकार इति तेन यावत्कालं रथकरणसंबन्धस्तावत्कालं रथकार इत्युच्यते न सर्वदा । अतस्त्रैवर्णिकस्य रथकारस्याभावाद्विद्यारहितस्यापि ऋभुसौधन्वनसारवतापरपर्यायस्य जात्यन्तरस्य रूढ्यावगतस्य वचनादाधानेऽधिकारो भवति ॥

## ऋतुनक्षत्रपर्वमीमांसा—

वसन्ते ब्राह्मणोऽग्निमादधीत । ग्रीष्मे राजन्य आदधीत शरदि वैश्य आदधीत । तै. ब्रा. १ । १ । २ ऋभूणां त्वेति रथकारस्य ते. ब्रा. १ । १ । ४ हेमन्तो वा शरद्वैश्यस्य, शिशिरः सार्ववर्णिकः । आप. श्रौ. सू. ५ । ३ । २० ग्रीष्मो हेमन्तश्च राजन्यस्य सत्याषाढ श्रौ. सू. ३ । ९ वर्षाः प्रजापशुकामैश्वर्यकामानाम् । कात्यायनश्रौ. सू. ४ । ७ यस्मिन्कस्मिंश्चिदृतावादधीत । आश्व. श्रौ. सू. २ । १ । १४ सति संभव एत उक्ता ऋतवोऽवश्य यथासंभव संपादनीयाः । असंभवे तु " यस्मिन्कस्मिंश्चिदृतावयं पक्ष आश्रयणीय. । नहि अङ्गानुरोधेनाङ्ग्यनुष्ठानम् । ऋतुनक्षत्रपर्वादीन्यङ्गानि प्रधानमाधानम् । तत्र प्रमाणम्—अथो खलु यदैवैनं यज्ञ उपनमेत् । अथादधीत तै. ब्रा. १ । १ । २ वम्पकारा अपि " यदैवैनं श्रद्धोपनमेदथादधीत " सेनार्थैः

"बौधा. २ । १२ इति ऋतुविचारः । नक्षत्राणि । कृत्तिकामारभ्य विशाखापर्यन्तं देवनक्षत्राणीति श्रुतम् । "कृत्तिकाः प्रथमं विशाखे उत्तमम् । तानि देवनक्षत्राणि" । तै. ब्रा. १ । ५ । २ सर्वं दैवं कर्म देवनक्षत्रेषु कार्यमिति न्यायः । तथापि श्रुत्यैव तन्मध्ये कानिचिन्नक्षत्राणि आधानमन्त्रा विहितानि । तानि कृत्तिका, रोहिणी, पुनर्वसू-पूर्वा फल्गुनी उत्तरा फल्गुनी (मघानक्षत्रान्तर विद्यमाने)—चित्रा—इति । तत्र निर्दोषं नक्षत्रं तु रोहिण्येव । बौधायनोऽपि "रोहिण्यां संपद्यते तस्यामादधीत" इत्युक्तवान् बौ. सू. २ । १२ आपस्तम्बाचार्या अपि "सर्वाणि नित्यवदेके समामनन्ति" सर्वशब्दः प्रकृतपरामर्शवाचकः । आप. श्रौ. सू. ९ । ३ १५ मक्षतानि च नक्षत्राणि "कृत्तिकाः—रोहिणी—मृगशीर्षं—पुनर्वसू पूर्वा, फल्गुनी—उत्तरा फल्गुनी हस्तः—चित्रा—विशाखे अनुराधाः—श्रवणम् उत्तरा भाद्रपदाः" इति । एतेषु यस्मिन्कस्मिन्नपि नक्षत्रेऽप्यग्न्याधेयमित्यन्येषामाचार्याणामभिप्रायः सूचितः । एतावता वसन्तादिऋतवः कृत्तिकादीनि नक्षत्राणि विहितानि । इदानीं पर्वविचारः—"अमावास्यायां पौर्णमास्यां वाधेयः" आप. श्रौ. सू. ५ । ३ । १७ "अमावास्यायामग्न्याधेयम्" इति कात्यायनः । एतावाचार्यौ स्वतन्त्रमेव पर्वाधानं विधत्तः । बौधायनस्तु पर्वनक्षत्राधानं विधत्ते । आश्वलायनस्तु ऋतुपर्वाधानं विधत्ते—"वसन्ते पर्वणि ब्राह्मण आदधीत" इति आश्व. श्रौ. सू. २ । १ । १३ । एतेन ऋतुनक्षत्राधानं पर्वाधानं पर्वनक्षत्राधानं केवलऋत्वाधानमिति चतस्रो विधाः सौम्यः । इति । तत्र ऋतुनक्षत्रपक्षे शुक्लपक्षः श्रेयान् ।

क्षौमे वसानावग्निमादधीयाताम् ।

गुणस्य तु विधानत्वात्पत्न्या द्वितीयशब्दः स्यात् । जै. ६ । १ । ५

सूत्रार्थः—गुणस्य—क्षौमरूपगुणस्य विधानशब्दविधेयकोटिनिविष्टत्वात् । द्वितीयशब्दो द्विवचनवाचकः शब्दः—प्रत्ययः पत्न्या एव वाचकः स्यात् ।

क्षौमे वसानौ जायापती अग्निमादधीयाताम् । आप. श्रौ, सू. ५ । ४ । १०

आधानं प्रकृत्य क्षौमे वसानावग्निमादधीयाताम्" इति श्रुतम् । तत्र संशयः । किमाधानं द्वौ पुमांसौ सजातीयौ सह कुर्वीतामुतैक इति । तत्र—

पूर्वत्राख्यातसंख्यायाः कर्तृरूपान्वयः स्थितः ।
तेनेह कर्तृरूपस्य भेदो द्विवचनाद्भवेत् ॥
वसानाविति चैकारात्पुद्वय संप्रतीयते ।
द्वित्वपुंस्त्वे हि तद्वाच्ये नियम्येते च ते मिथः ॥ शा. दी. ६ । १ । ५

यद्यपि पुद्वयस्त्रीपुंसयोरपि द्विवचनमेकशेषान्तं दृष्टं कुक्कुटश्च कुक्कुटी च कुक्कुटाविति तथापि पुंस्याभिधानासूत्रत्वे द्वित्वं चास्याभिधेयं तयोश्चाभिधेययोरसति स्त्रीसाहित्यप्रमाणे परस्परनियमात्पुमांसावेव द्वौ गम्येते । तयोश्चोपदानप्रमाणेनाधिकारार्थमेतद् वचनम्

'कश्चिद्योग्यताजननार्थं कर्तारं परिक्रीणीते स्वयमेव योग्यत्वात् तस्य कार्यं प्रति गुणभावेन परिक्रीणीते तेन गुणतयैव पारार्थ्यं तासां कर्तॄणां प्रातिस्विकप्रधानामेव च समाख्यया व्यवस्थानात्तत्रैव पुरुषाणां गुणभावस्तत्रैव समाख्यानियमः । सत्कारात्तु यजमाना वचनादृत्विजामपि भवन्ति हिरण्यमालिन ऋत्विज इतिवत् ।

तत्र वपनं विधाय वपनसाधनं विधत्ते—' लोहितायसेन निवर्तयते ' तै॰ ब्रा॰ १।५।६

भाष्यम्—अयसा निर्मितः क्षुर आयसः स च लोहितस्ताम्रमिश्रेणायसा निर्मितत्वात् । साधनं विधाय क्रमं विधत्ते—' उपपक्षावग्रे ' अथ श्मश्रूणि अथ केशान् । अथ दैवं क्रमं । ' श्मश्रूण्यग्रे । अथोपपक्षौ ' । अथ मानुषः क्रमः । इमावेव नर्मौ श्रोतौ । इत एवाक्रम्य स्मृतिकारैः पुरुषार्थतया विहितः श्मश्रुनेनैव क्रमेण कार्यं नासुरक्रमेण । अयं हि आसुरक्रमः—' केशानग्रे । अथ श्मश्रूणि । अथोपपक्षौ ' । एते सर्वे पक्षास्तैत्तिरीयब्राह्मणे १।५।६ इत्यत्र श्रुताः । स्मर्यते च धर्मनिष्ठेन भगवता वसिष्ठेन पुरुषार्थतया क्षौरकालनियमः—

मासि मासि गृहस्थस्य पक्षे पक्षे तु यज्वनाम् ।
ऋतावृतौ यतीनां तु यथेष्टं ब्रह्मचारिणाम् ॥ १ ॥

अत्र मासि मासि गृहस्थस्येत्यनेन न हि यज्वभ्यो विना गृहस्थस्य स्थितिः संभवति तथापि निरग्निकस्यानग्निस्थस्याश्रमस्थितपरतया बोध्यम् । अनया वचनात् गृहस्थस्य गृहस्थानां वचनव्यत्यासेन पक्षे पक्षे मासि वेति विकल्प्यते । अत्र प्रमाणम् ' केशश्मश्रु वपते वाशिखम् ' २।१।९ इति कात्यायनसूत्रात् । अत्र कर्काचार्य—पौर्णमासे वपनस्य विकल्पो नास्ति तस्मादमावास्यायामस्तीति सिद्धम् । अतो वपनव्यत्यास कृत्वैवोक्त एव स्मृतेरर्थो नान्य । देवयाज्ञिकास्तु कर्कमते वपनस्य विकल्पमाहुः । भर्तृयज्ञमते वपनं नित्यमेव अशिखं वा सशिखं वेति विकल्पः । गानने विशेष—' केशश्मश्रु वापयते दक्षिणोपक्रमान्केशान्सव्योपक्रमान्नखान्श्मश्रु कनिष्ठिकात कारयते । न कक्षौ एनी नखांश्च कारयीत ' इति ।

आचार्यमतं पुनरानन्तते—

पर्वणि च केशश्मश्रु वापयते । आप॰ श्रौ॰ सू॰ ४।१।४

ऐच्छिकवाह्वापनस्य पर्वणि पाक्षिकं संनियम्यते वापयत एव पर्वणीति । अत्र धूर्तस्वामिन—अर्धमासवाहपनस्य यदि विद्यते ततोऽस्मिन्काले नियम्यते । प्रवृत्तस्य वपनस्य कालविधिपरत्वाद्वचनस्यार्थो तदभावादिच्छाप्राप्तस्य वपनस्य कालमात्रनियमविधिः । उत्तरत्रापि ४।१।५ इत्यत्रत्यस्य इति वचनात् ' यदि वर्धिष्णा केशा विद्यन्त इच्छा च विद्यते ततोऽस्मिन्काले नियम । अपर्वणि कल्पे कर्मण्यन्यत्रापि इच्छया तथा

कुर्यादिति । केचित्प्रकरणादेव कर्माङ्गत्वे सिद्धे पर्वग्रहणात्कर्मणोऽनङ्गमिति । अन्ये तु अपर्वकालेऽपि दर्शपूर्णमासप्रवृत्तौ कर्तव्यमित्याहुः । ' यज्ञियो भूत्वा मेधमुपैति । १।६। ५ तै. इतिलिङ्गात् । केशवस्वामिमते तु लोमनखवपनप्राप्त्यर्थश्चकार इति स्वमते तु केशश्मश्रुग्रहण समानदेशस्य ,नखस्यापि प्रदर्शनमपि अल्पश अल्पान्यपि रोमाणि वाप- येत । वाजसनेयिमतात्तु "अल्पशो लोमानि वापयते" इति आप श्रौ सू ४।१।५।

अस्यार्थ —अल्पशः केशान्वापयते अल्पशो लोमानि वापयेदपिशब्द श्मश्रुग्रह- णार्थ इतिसूत्रयोजनेति अस्मिन्नपि पक्षे प्रतिपूर्णमासमेव वपन न दर्शे ।

अत्र रुद्रदत्त —केशश्मश्रुषु च मध्ये श्मश्रु त्वल्पमपि वापयत एव ' केशास्त्वल्पे सन्तौ नोप्येरन्' इति । बौधायनस्त्वाह यदि केवल श्मश्रु वापयिष्यमाण स्यादिति ।

तदय निष्कर्ष —पुरुषार्थतया विहित वपनमैच्छिकम् । इष्टिप्रकरणे सूत्रित वपनमङ्ग मनङ्गमिति ।

तत्रापि पौर्णमासे वपनं नित्य दर्शे तु विकल्प । प्रकृत आधानाङ्गभूत वपन तु कार्यमेव । विशेषविधानात् । इति वपनविचार ।

## अजस्रमीमांसा ।

---

" आधानाद्द्वादशरात्रमजस्रा " आश्व श्रौ सू २ । १ । ३५

" द्वादशाहमजस्रेष्वग्निषु यजमान स्वयमग्निहोत्र जुहुयात् " । आप ५ । २२ । ११

" द्वादशरात्र षड्रात्र त्रिरात्रमन्तत " । कातीये ४ । १० । १६

" अनस्ता अस्यैते अग्नयो भवन्ति " । बौधा.

एतेषु सूत्रेषु विचारितेषु भाष्यकारवृत्तिकारप्रयोगकारीयमतेषु मीमासितेषु एतन्निष्पद्यते—

१ " अग्निहोत्रपूर्वाधाने एव अजस्रपक्ष "

तत्र प्रमाणम्—आधानाद्द्वादशरात्रमजस्रा । आश्व श्रौ. सू २।१ । ३५ भगवता श्वलायनाचार्येणाधानान्तरमग्निहोत्रस्यैवोच्यमानत्वादनुष्ठानक्रमणेन कर्मणा व्याख्यान- मित्युक्तत्वाच्च ।

२ " इष्टिपूर्वे अजस्रधारण नास्ति "

प्रमाणम्—अन्यमाहवनीय प्रणीयाग्नीनन्वादधाति । आप श्रौ. सू. १ । १ । २ इष्ट्यर्थतयान्यस्य प्रणयनस्य विधानात् । "अपवृज्य श्वोभूते पौर्णमासेन यजेत" आप. श्रौ. सू. ५ । २४ । ९ इत्यपवर्गविधानाच्च ।

३ " सोमपूर्वाधानेऽप्यजस्रधारण नास्ति "

अगताग्नेयोऽपि केचिदजस्रधारणमनुतिष्ठन्ति ते सूत्रनिरोधादुपेक्ष्या । बोधायनसूत्राध्यायिना तु द्वैधसूत्रादजस्रधारणे विकल्प । आपस्तम्बसूत्राध्यायिना तु यदि मथित्वाहितं स्याद्दक्षिणाग्निस्तर्हि तस्याजस्रधारणं युक्तम् । आहार्यस्य दक्षिणाग्नेर्नास्त्यजस्रधारणम् । गार्हपत्यस्य चाजस्रधारणं नित्यम् । नित्यं गार्हपत्यमित्यापस्तम्बसूत्रात् । सत्याषाढीयानां तु आहार्योऽपि दक्षिणाग्निर्नित्य ।

इत्यजस्रविचार ।

एतत्सर्वं मनसि निधाय मीमांसकशिखामणिनाश्वलायनसूत्रवृत्तिकृता गार्ग्यनारायणेन व्याख्यातं तदिदं मीमांसामलमुदाहराम —

द्वादशसु रात्रीष्वनुनिर्वपेत् । तै ब्रा १ । १ । ६

संस्कृते कर्मसंस्काराणां तदर्थत्वात् । जै ५ । ३ । २१

सूत्रार्थ —संस्कृते पवमानेष्ट्यादिभि संस्कृतेष्वग्निषु कर्माणि वर्तेरन् कुत संस्काराणां तदर्थत्वात् । संस्कारशब्दा एत आहवनीयादय संस्कारस्य कस्यचिदभावेनाहवनीयादिषु कर्म स्यात् ।

द्वादशाहे पवमानहवींषि निर्वपेत् । आ श्रौ सू ५ । २१ । २

मीमांसा—आधानप्रकरणे पवमानहवींषि विहितानि तान्याधानाद्विप्रकृष्यन्ते । द्वादशरात्रीष्वनुनिर्वपेदित्यादिभिस्तत्राग्निहोत्रादीनि किमाधानानन्तरमेव प्रवर्तेरन् उत तेषु कृतेष्विति विचारे कर्तव्यान्याहवनीयस्य निष्पन्नत्वात् । आधानमात्रस्य निरपेक्षस्य तदुत्पादकत्वात्पवमानहविर्भिस्तु निष्पन्नस्याहवनीयादयो निष्पन्ना । निष्पन्नेषु तेषु भवितव्य कर्मभिरिति प्राप्त उच्यते—न निरपेक्षमाधानमग्नीनामुत्पादकं पवमानहविषामपि तदुत्पादकत्वात् । नच विकल्पस्तेषामाधानोत्तरकाले विधानात् । अत समुचितानां तदुत्पादकत्वान्न तेभ्य प्रागाहवनीयनिर्वृत्ति । यद्यप्याधानात्पवमानहवींषि तदाख्यनङ्गेन प्रधानेन साध्याग्निनिष्पत्तेस्तदुत्तरकालमेवाग्निनिष्पत्ति । यत्तूक्तं निष्पन्नस्यैवाग्ने संस्कारमात्रं हविर्भिरिति । तथाऽप्यस्य संस्कारस्याहवनीयकार्योपयोगित्वात्तेन विना निष्पन्नस्याप्यग्नेरग्निहोत्रादिकार्याक्षमत्वात्तदुत्तरकालैव कर्मणा प्रवृत्ति । अत्र भाष्यकारवार्तिककारमते पूर्णाहुत्यन्तमाधानम् । एतत्तु सोमनाथीये बृहस्पतिनाजपेयदध्यर्तेन्दे दधति । पार्थसारथिमिश्रा अपि यदाऽप्याधानात्पवमानहवींषि शास्त्रदीपिकायामुद्घोषयामेवम् । एवमङ्गमनङ्गमिति पक्षद्वय तथापि पवमानहविर्निर्वाप सद्योऽथवा द्वादशाहे त्र्यहे त्र्यहे चतुरहेऽर्धमासे मास्यृतौ संवत्सरे वा इत्यापस्तम्बसूत्रे ५ । २१ । १ । २ द्वादशरात्रिषु अनुनिर्वपेदिति तै० ब्राह्मण एतेषु त्रिषु पक्षेषु यदा कदा वा कार्यं इति तु सर्ववादिसमतम् । त निर्वाप विनाऽग्निहोत्राद्यनुष्ठानं न भवति । इति तु सामञ्जस्यम् । अ धानाद्द्वादशरात्रमजस्रा ॥ ३५ ॥ आश्व श्रौ सू २ । १ । ३५ अत्राधानमिष्टिश्चोक्त्वा आधानादूर्ध्वं द्वादशरात्रमजस्रा इत्युक्तम् । तस्यायमभिप्राय –यावता कर्मसमुदायेनाग्निना सिद्धिर्भवतीति ।

## अग्नेः सगुणत्वविचारः ।

---

'अग्नये पवमानायाग्नये पावकायाग्नये शुचये' इति ।

अवचने च गुणशास्त्रमनर्थकं स्यात् ॥ जै० १०–४–२८

सूत्रार्थ —यदि च गुणाभिधानं न क्रियते गुणशासनमनर्थकं स्यात् ।

अग्नये पवमानायाग्नये पावकायाग्नये शुचय इति आप श्रौ सू ५ । २१ । ५

अत्र मीमांसा—तत्र संशयः —तद्धविःषु त्रिष्वपि किमेक एवाग्निशब्दो वक्तव्यः किमुभौ शब्दौ वक्तव्यौ । अग्नये पवमानाय निर्वपाम्यग्निं पवमानमावह्येति पवमानस्याहमुज्जितिमनूज्जेषमिति । 'तत्रैकेनार्थनिर्देशसिद्धेर्नोच्चारणं द्वयोः । सत्याग्निशब्द एवैकस्योदकानुग्रहो भवेत् ।' स्यादेव यदि प्रथममर्थं विधाय पश्चाच्छब्दाश्रयणं स्यात् उभयं तु भावनाङ्गत्वेन विधीयते इत्यतः तस्मादुभयोर्विधानादुभौ वक्तव्यौ ॥

## आर्त्विज्यविचारः ।

---

ब्राह्मणानामिदं हविः । नेहाब्राह्मणस्यास्ति । तै ब्रा ३ । ७ । ५

स्मृतेर्वा स्याद्ब्राह्मणानाम् ॥ जै० १२–४–४३

याजनाध्यापनप्रतिग्रहाः स्मृत्या ब्राह्मणानामेव विहिताः ।

ब्राह्मणानृत्विजो वृणीते आप श्रौ सू १० । १० । १

अत्र मीमांसा—आधानप्रभृतिषु कर्मसु किं त्रिभिरपि द्विजातिभिरार्त्विज्यं कारयितव्यमुत ब्राह्मणैरेवेति संशयः । तत्र 'त्रयोऽप्यार्त्विज्यमर्हन्ति विद्वत्त्वाविशेषेण पुनः । पुरुषार्थमतः कर्मवैगुण्यं नास्ति किंचन' । याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्त्युपाया इति नियमः पुरुषार्थतया स्मर्यते न क्रत्वर्थतया । तेन क्षत्रियवैश्यावार्त्विज्यं कुर्वन्तौ नियमातिक्रमात्काम स्वधर्मात्प्रच्यवेयातां न तु क्रतोः काचिद्गुणहानिः । तस्मात्त्रिभिरप्यार्त्विज्यं कारयितव्यमिति प्राप्तेऽभिधीयते 'द्विजोत्तमानामार्त्विज्यं न तु क्षत्रियवैश्ययोः । ब्राह्मणार्त्विज्यनियमः क्रत्वर्थेनापि हि स्मृतः ।' 'यज्ञं व्याख्यास्यामः' इत्युपक्रम्य ब्राह्मणानामार्त्विज्यमिति स्मरन्तो यज्ञसूत्रकाराः क्रत्वर्थेन स्मरन्तीति निस्सष्टमेतत् । तथा च भगवद्भाष्यणेऽपि 'क्षत्रियो याज्ञिको यस्य चाण्डालस्य विशेषतः । कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः ।' इति सुरा देवा भक्षयन्त्यृषिविभक्ता इति देवताहविर्योगनिराकरणात्क्रतुवैगुण्यमेव दर्शितम् 'राजयाजकयाज्यस्य विनश्यति यथा हविः' इति च । अब्राह्मणार्त्विज्ये हविर्नाशश्च स्मृतः । लिङ्गानि च दर्शितानि ब्राह्मणानामिदं हविरित्येवमादीनि । तस्माद्ब्राह्मणानामेवार्त्विज्यमिति सिद्धम् । यथाच भगवानाभश्वलायनाचार्यः —

अन्तेवासी वा । आश्व. श्रौ. सू. २ । ४ । ४

अत्र वृत्तिः—ऋत्विजस्त्रिविधा देवभूताः पितृभूता मनुष्यभूता इति । ये कर्मणि कर्मणि व्रियन्ते ते देवभूताः । येऽन्वयागता ऋत्विजस्ते पितृभूताः । ये लोकस्य पुरुषस्य सर्वाणि कर्माणि कर्तुं व्रियन्ते ते मनुष्यभूता. । तत्र यस्याहिताग्नेः पितृभूता मनुष्यभूता वा ऋत्विज. सन्ति तेषामृत्विजामेकः कश्चित्पर्ववर्जितेषु कालेषु जुहुयात् । यस्य देवभूतास्तस्यान्तेवास्येवेति निनिवेशः । स एव गृह्येऽप्याह—

ऋत्विजो वृणीतेऽन्यूनानतिरिक्ताङ्गान्ये मातृत: पितृतश्चेति ।

यून ऋत्विजो वृणीत इत्येके ॥

वरणक्रमोऽपि तत्रैव " ब्रह्माणमेव प्रथमं वृणीतेऽथ होतारमथाध्वर्युम् । अथोद्गातारम् ।

इत्यार्त्विज्यविचारः ।

प्रथमाधाने तु यत्सूत्रं गृहीतं स्यात्तत्सूत्राध्यायिनैवाग्न्याधानं कार्यम् । तच्चाध्वर्योः सकाशात् । तथाचाचार्यसूत्रम्—

यजमानाय प्रयच्छति ॥ ५ । ८ । ७ इत्यापस्तम्बः ।

अर्थेयुश्च यजुर्वेदविहितानां पदार्थानां कर्ता ।

इति समाख्ययाध्वर्योर्लब्धः । यथा ऋग्वेदेन होता इत्यादिस्थलेषु सर्वत्रैवमेव । न च समाख्यायाः किंचिद्बाधकं पश्यामः ।

## अजबन्धनविचारः ।

उत्तरेण गार्हपत्यायतनं कल्माषमजं बध्नाति । आप. श्रौ. सू. ५ । ७ । १७ । कल्माष.—कृष्णबिन्दुः । अथाजस्य प्रतिपत्तिरग्नीधे दक्षिणादानम् । सूत्रितं चाचार्येण—'अजं पूर्णपात्रमुपकल्पं सार्वसूत्रमित्यग्नीधे' ५ । १० । कात्यायनेन विकल्पेनाजबन्धनं सूत्रितम्—'गार्हपत्यागारेऽजं बध्नाति न वा' का. श्रौ. सू. ४ । ८ । १ यदा बध्यते तदा प्रतिपत्तिरपि पूर्ववदेव सूत्रिता । यथा—नियमानं प्रातरग्नीधे दद्यात् ।

इत्यजबन्धनविचारः ।

## विहारप्रक्रमादिविचारः ॥

द्वादशसु विक्रमेष्वग्निमादधीत । चक्षुर्निमित आदधीत तै. ब्रा. १ । १ । ४ ।

भाष्यम्—विक्रम —प्रक्रम । स च द्विपदः । यथा च प्रक्रमा द्विपदस्त्रिपदो वा । गार्हपत्याद्द्वादशसु विक्रमेषु समाप्तेषु आहवनीयायतनं कृत्वा तत्राग्निमादध्यात् । चक्षुषा दृष्टा

मार्गेणैतावन्देशे द्वादशविक्रम सम्भवतीति निश्चित्य तन्नाधीत । सर्वं चैतत्सूत्रित शुल्बसूत्र आपस्तम्बाचार्येण । भाषितं च कपर्दिस्वामिना ।

आग्न्याधेयिके विहारे गार्हपत्याहवनीययोरन्तराले विज्ञायते । सू २ । १ ।

अत्र भाष्यम्–अग्नय आधीयन्ते यस्मिन्कर्मणि तदग्न्याधेयं तद्भवम् आग्न्याधेयिकं । विह्रियन्तेऽस्मिन्नग्नय इति विहारो देवयजनदेशः । तमधिकृत्य गार्हपत्याहवनीययोरन्तराले गार्हपत्याहवनीयशब्दाभ्यां तदायतने लक्षणा । अन्तरालश्रुतिसामर्थ्याद्दन्तराले अन्तराळं प्रस्तुत्य विज्ञायते श्रूयते सर्वत्रास्यायमेवार्थ । गार्हपत्याहवनीयग्रहणात्तयोरेवान्तराले श्रुतिरेव पठ्यते । कात्यायनस्त्वापादप्यमुमेवार्थं सूत्रयन्ति । बौधायनस्तु यजमानब्राह्मणं परं चात्र प्रक्रमशब्दार्थो नाधिगत । तदर्थमयमुपक्रम । प्रक्रमो द्विपदस्त्रिपदो वा । इत्याचार्यशुल्बसूत्रम् । २ । पदप्रमाणं कपर्दिभाष्ये—पञ्चदशाङ्गुलं प्रक्रम पदविक्षेपवाची । पदाद्यो मानसाधनतया गृह्यन्ते । अतो न विक्षेपमात्रेण प्रयोजनम् । किंतु तत्सन्निधिना केनचिद्द्रव्येण । अतो विक्षेपफलभूतसंयोगविभागाभ्यामुपलक्षिते देशान्तरालपरिमितद्रव्येणा-दिना प्रयोजनं गच्छन्हि यानो जन एकप्रक्रमस्य पदं भूमौ स्थापयित्वान्यत्पदं विक्षिप्य निदधाति । निर्विकारं सगच्छन्सम पुरुषविततनिधीयमानयो पदयोरन्तरालं यथा पदपरिमितं भवति तथा गच्छति । अतो निक्षिप्तेन पदेन पदद्वयं व्याप्तमिति द्विपद प्रक्रम । यद्यपि त्रिपदो वा इत्याचार्यसूत्रे श्रुत तथापि तत्र व्यवस्थैवम् । "पञ्चारत्निपुरुषो दशपदो द्वादशाङ्गुलं पदं प्रक्रमस्त्रिपदसमविभक्तस्य इति कात्यायनश्रौतसूत्रम् । १६।८।२१ । अत्र कर्कभाष्यं पञ्चारत्नयो यस्य स पञ्चभिररत्निभिः पुरुष । दशभि पदैः पुरुष । द्वादशभिरङ्गुलैः पदमित्येतन्मर्थो न भवति । इव प्रागरत्न्यादीनां लक्षणस्यानुक्तत्वेनासिद्धत्वात् । अतश्चैवम्—पुरुषस्य समविभक्तस्य य पञ्चमो भाग सोऽरत्नि । तस्य दशमो भाग पदम् । पदस्य द्वादशो भागोऽङ्गुलम् । त्रिभि पदैरेक प्रक्रम । इति । अत्र युक्तम्—प्रक्रमस्याद्यात्रित्यादिना सम्योक्ता श्रौतसूत्रे न प्रक्रमस्य प्रमाणमुक्तम् । अत प्रक्रमस्त्रिपद इत्यसौ पठितव्यात्रिपद एवास्तु सर्वत्र । नैवम् । अग्निचित्प्रकरणे पठितत्वात्तस्येदृग् त्रिपद प्रक्रम । आधानसोमयो प्रत्यक्षरचनाभावाद्यौगिक प्रक्रमो ग्राह्य । योगस्तु–'क्रमु पादविक्षेपे' प्रकर्षेण क्रमणं क्रम । क्रमणेनावगन्तव्यमात्र प्रक्रमो भवति तस्मात्प्राङ् प्रक्रामति त्रीन्विक्रमान् । २ । ५ । १ । १ । अरत्निस्तु पुरुषपञ्चमभागस्तस्मादाधाने द्विपद प्रक्रम इति सिद्धम् । पञ्चदशाङ्गुलं पदमुत्तमं पक्ष । द्वादशाङ्गुलं मध्यम । दशाङ्गुलं पदं स्वल्पमिति प्रयोक्तार । तत्र व्यवस्था–पञ्चदशाङ्गुलं पदमापस्तम्बसूत्रानुयायिनाम् । द्वादशाङ्गुलं कात्यायनीयानाम् । अन्येषा विकल्प । इति । आयतनानि–तस्मात्प्राचीनमष्टासु प्रक्रमेषु ब्राह्मणस्याहवनीयायतनम् । एकादशसु राजन्य । द्वादशसु वैश्यस्य ।

अन्तेवासी वा । आश्व. श्रौ. सू. २ । ४ । ४

अत्र वृत्तिः—ऋत्विजस्त्रिविधा देवभूताः पितृभूता मनुष्यभूता इति । ये कर्मणि कर्मणि व्रियन्ते ते देवभूताः । येऽन्वयागता ऋत्विजस्ते पितृभूताः । ये त्वेकस्य पुरुषस्य सर्वाणि कर्माणि कर्तुं व्रियन्ते ते मनुष्यभूताः । तत्र यस्याहिताग्नेः पितृभूता मनुष्यभूता वा ऋत्विजः सन्ति तेषामृत्विजामेकः कथितपर्ववर्जितेषु कालेषु जुहुयात् । यस्य देवभूतास्तस्यान्तेवास्येवेति विनिवेशः । स एव गृह्येऽप्याह—

ऋत्विजो वृणीतेऽन्यूनानतिरिक्ताङ्गान्ये मातृत. पितृतश्चेति ।

एक ऋत्विजो वृणीत इत्येके ॥

वरणक्रमोऽपि तत्रैव "ब्रह्माणमेव प्रथमं वृणीतेऽथ होतारमथाध्वर्युम् । अथोद्गातारम् । इत्यार्त्विज्यविचारः ।

प्रथमाधाने तु यत्सूत्रं गृहीतं स्यात्तत्सूत्राध्यायिनैवारणिदानं कार्यम् । तत्राध्वर्योः सकाशात् । तथाचाचार्यसूत्रम्—

यजमानाय प्रयच्छति ॥ ५ । ८ । ७ इत्यापस्तम्बः ।

अध्वर्युश्च यजुर्वेदविहितानां पदार्थानां कर्ता ।

इति समाख्यानशादयमर्थो लभ्यः । यथा ऋग्वेदेन होता इत्यादिस्थलेषु सर्वत्रैवमेव । न च समाख्यायाः किंचिद्बाधकं पश्यामः ।

अजबन्धनविचारः ।

उत्तरेण गार्हपत्यायतनं कल्माषमजं बध्नाति । आप. श्रौ. सू. ५ । ७ । १७ । कल्माष—कृष्णबिन्दुः । अस्याजस्य प्रतिपत्तिरग्निधे दक्षिणादानम् । सूत्रितं चाचार्येण—'अजं पूर्णपात्रमुपबर्हणं सार्वसूत्रमित्यग्नीधे' ५ । १० । ७ कात्यायनेन तु विकल्पेनाजबन्धनं सूत्रितम्—'गार्हपत्यागारेऽजं बध्नाति न वा' का. श्रौ. सू. ४ । ८ । १ यदा बध्यते तदा प्रतिपत्तिरपि पूर्ववदेव सूत्रिता । यथा—विद्यमानं प्रातरग्नीधे दद्यात् ।

इत्यजबन्धनविचारः ।

विहारक्रमादिविचारः ॥

द्वादशसु विक्रमेष्वग्निमादधीत । चक्षुर्निमितं आदधीत तै. ब्रा. १ । १ । ४ ।

भाष्यम्—विक्रम—प्रक्रम. । स च द्विपदः । तथा च प्रक्रमा द्विपदस्त्रिपदो वा । गार्हपत्याद्द्वादशसु विक्रमेषु समापेषु आहवनीयायतनं कृत्वा तत्राग्निमादध्यात् । चक्षुषा दृष्ट्वा

प्रवेणैतावान्देशो द्वादशविक्रमः सम्पद्यत इति निश्चित्य तत्रादधीत। सर्वं चैतत्सूचितं शुल्व-सूत्रे आपस्तम्बाचार्येण। भाषितं च कपर्दिस्वामिना।

अग्न्याधेयिके विहारे गार्हपत्याहवनीययोरन्तराले विज्ञायते। शु २। १।

अत्र भाष्यम्--अग्नय आधीयन्ते यस्मिन्कर्मणि तदग्न्याधेयं तद्धाग्न्याधेयिक। विह्रियन्तेऽस्मिन्नग्नय इति विहारो देवयजनदेशः। तमधिकृत्य गार्हपत्याहवनीययोरन्तराले गार्हपत्याहवनीयशब्दाभ्यां तदायतने लक्षणा। अन्तरालश्रुतिसामर्थ्याद् अन्तरालेऽन्तरालं प्रस्तुत्य विज्ञायते श्रूयते सर्वेषामाचार्याणाम्। गार्हपत्याहवनीयग्रहणात्तयोरेवान्तराले श्रुतिरेव पठ्यते। कात्यायनस्त्वापस्तम्बमुनेरर्थं सूचयति। बौधायनस्तु यथाब्राह्मणं परं चात्र प्रक्रमशब्दार्थो नाधिगतः। तदर्थमयमुपन्यासः। प्रक्रमो द्विपदस्त्रिपदो वा। इत्याचार्यशुल्बसूत्रम्। २। पदप्रमाणं कर्कभाष्ये--पञ्चदशाङ्गुलं प्रक्रमः पदविक्षेपवाची। पदादयो मानसाधनतया गृह्यन्ते। अतो न विक्षेपमात्रेण प्रयोजनम्। किंतु तदवधिना केनचिद्द्रव्येण। अतो निक्षेपफलभूतसंयोगविभागाभ्यामुपलक्षिते देशान्तराले परिमितदण्डादिना प्रयोजनं गच्छति सता जनेन एकक्रमस्य पदं भूमौ स्थापयित्वान्यपदं विक्षिप्य निदधाति। निर्विकारं गच्छतः पुरःस्थितनिधीयमानयोः पदयोरन्तरालं यथा पदपरिमितं भवति तथा गच्छति। अतो निक्षिप्तेन पदेन पदद्वयं व्याप्तमिति द्विपदः प्रक्रमः। यद्यपि त्रिपदो वा इत्याचार्यसूत्रे श्रुतं तथापि तत्र व्यवस्थैव। "पञ्चारत्निपुरुषो दशपदो द्वादशाङ्गुलं पदं प्रक्रमस्त्रिपदः समविभक्तस्य इति कात्यायनश्रौतसूत्रम्। १६।८।२१। अत्र कर्कभाष्यं पञ्चारत्नयो यस्य स पञ्चभिररत्निभिः पुरुषः। दशभिः पदैः पुरुषः। द्वादशभिरङ्गुलैः पदमित्येनमर्थो न भवति। इत आरभ्यार्थानां लक्षणस्यानुवृत्तत्वेनासिद्धत्वात्। अतश्चैवम्--पुरुषस्य समविभक्तस्य यः पञ्चमो भागः सोऽरत्निः। तस्य दशमो भागः पदम्। पदस्य द्वादशो भागोऽङ्गुलम्। त्रिभिः पदैरेकः प्रक्रमः। इति। अत्र युक्तम्--प्रक्रमस्याधास्थित्यादिना सम्बद्धा श्रौतसूत्रे न प्रक्रमस्य प्रमाणमुक्तम्। अतः प्रक्रमस्त्रिपद इत्यसौ पठितत्वात्त्रिपद एवास्तु सर्वत्र। नैवम्। अग्निचित्प्रकरणे पठितत्वात्तत्रैव ग्राह्यस्त्रिपदः प्रक्रमः। आधानसोमयोः प्रत्यक्षवचनाभावात् द्वैधिकः प्रक्रमो ग्राह्यः। योगस्तु--'क्रमु पादविक्षेपे' प्रकर्षेण क्रमणं क्रमः। क्रमणेनानेनात्र प्रक्रमो भवति तस्मात्प्राङ् प्रक्रामति आग्निकात्। २। ५। १। १। अरत्निस्तु पुरुषपञ्चमांशस्तस्मादाधाने द्विपदः प्रक्रम इति सिद्धम्। पञ्चदशाङ्गुलं पदमुत्तमं पदं। द्वादशाङ्गुलं मध्यमं। दशाङ्गुलं पदमिति प्रयोक्तारः। तत्र भवत्राता--पञ्चदशाङ्गुलं पदमापस्तम्बसूत्रानुयायिनाम्। द्वादशाङ्गुलं कात्यायनीयानाम्। अन्येषां विकल्पः। इति। आयतनानि--तस्मात्प्राचीनमत्रासु प्रक्रमेषु ब्राह्मणस्याहवनीयायतनम्। एकादशसु राजन्य[illegible] द्वादशसु वैश्यस्य।

अन्तेवासी वा । आश्व. श्रौ. सू. २ । ४ । ४

अत्र वृत्तिः—"ऋत्विजस्त्रिविधा देवभूताः पितृभूता मनुष्यभूता इति । ये कर्मणि कर्मणि व्रियन्ते ते देवभूताः । येऽन्वयागता ऋत्विजस्ते पितृभूताः । ये त्वेकस्य पुरुषस्य सर्वाणि कर्माणि कर्तुं व्रियन्ते ते मनुष्यभूताः । तत्र यस्याहिताग्नेः पितृभूता मनुष्यभूता वा ऋत्विजः सन्ति तेषामृत्विजामेकः कश्चित्पर्ववर्जितेषु कालेषु जुहुयात् । यस्य देवभूतास्तस्यान्तेवास्येवेति विनिवेशः । स एव गृह्येऽप्याह—

ऋत्विजो वृणीतेऽन्यूनानतिरिक्ताङ्गान्ये मातृतः पितृतश्चेति ।
यून ऋत्विजो वृणीत इत्येके ॥

वरणक्रमोऽपि तत्रैव "ब्राह्मणमेव प्रथमं वृणीतेऽथ होतारमथाध्वर्युम् । अथोद्गातारम् ।
इत्यार्त्विज्यविचारः ।

प्रथमाधाने तु यस्त्र गृहीतं स्यात्तत्सूनाध्यायिनैवारणिदानं कार्यम् । तथाध्वर्योः सकाशात् । तथाचाचार्यसूत्रम्—

यजमानाय प्रयच्छति ॥ ५ । ८ । ७ इत्यापस्तम्बः ।
अध्वर्युश्च यजुर्वेदविहितानां पदार्थानां कर्ता ।

इति समाख्यानतादध्वर्योरेव । यथा ऋग्वेदेन होता इत्यादिस्थलेषु सर्वत्रैवमेव ।
न च समाख्यायाः किंचिद्बाधकं पश्यामः ।

## अजबन्धनविचारः ।

---

उत्तरेण गार्हपत्यायतनं कल्मापमजं बध्नाति । आप. श्रौ. सू. ५ । ७ । १७ ।

कल्माषः—कृष्णबिन्दुः । अस्याजस्य प्रतिपत्तिरग्न्याधेये दक्षिणादानम् । सूत्रितं चाचार्येण—'अजं पूर्णपात्रमुपबर्हणं सार्वसूत्रमित्यग्न्याधेये' ५ । १० । ७ कात्यायनेन तु विकल्पेनाजबन्धनं सूत्रितम्—'गार्हपत्यागारेऽजं बध्नाति न वा' का. श्रौ. सू. ४ । ८ । १ यदा बध्यते तदा प्रतिपत्तिरपि पूर्ववदेव सूचिता । यथा—नियमानं प्रातरग्न्याधेये दद्यात् ।

इत्यजबन्धनविचारः ।

## विहारभ्रमादिविचारः ॥

---

द्वादशसु विक्रमेष्वग्निमादधीत । चक्षुर्निमित आदधीत तै. ब्रा. १ । १ । ४ ।

भाष्यम्—विक्रमः—प्रक्रमः । स च द्विपदः । तथा च प्रक्रमो द्विपदस्त्रिपदो वा । गार्हपत्याद्द्वादशसु विक्रमेषु समाप्तेषु आहवनीयायतनं कृत्वा तत्राग्निमादध्यात् । चक्षुषा दृष्ट्वा

तत्वाङ्गस्य कृतं भवति तेनाङ्गस्थोऽप्यसौ प्रधानधर्म इति विलम्बितप्रतीतिरपि बलीयान् । इतरथा प्रधानस्यैव वैगुण्यापत्तेः । अतोऽङ्गधर्ममुच्चैष्ट्वं बाधित्वा प्रधानधर्मं उपांशुत्वं स्यादिति सिद्धान्तितम् । एवं 'त्रयीगुणविरोधे च तादर्थ्यात्' इत्यनेन गतप्रायं स्यात् । न चोदाहरणमपि युक्तम् । वारवन्तीयं गायतीत्यस्याङ्गविधेरपि याजुर्वेदिकत्वादित्यन्यथा व्याख्यातम् । यस्य मन्त्रस्य वेदान्तरे समाम्नानमुत्पत्तिर्वेदान्तरे च विनियोगविधिस्तस्य किमुत्पत्तिवेदनिबन्धनः स्वरोऽथवा विनियोगवेदनिबन्धन इति संशयः । तत्र—'उत्पत्तेः पूर्वभावित्वात्तन्निबन्धन एव हि स्वरः प्रथमभावित्वाद्युक्तो नान्यो विलम्बितः ।' नैतदेवम् 'न स्वाध्यायमात्रेण मन्त्रस्य स्वरयोग्यता । तेन क्रियत इत्येवमतो वक्तुं न शक्यते । तेन तु क्रियते मन्त्रो यत्र वेदे विधीयते । विध्यायत्तं ह्यनुष्ठानं तत्र चापेक्षितः स्वरः ।' प्रयोज्यतयावधारितस्य मन्त्रस्य स्वरापेक्षा भवति न स्वरूपावगतिमात्रेण तस्माद्वारवन्तीयादेः सामवेदेनाक्रियमाणत्वात्तदनपेक्षितत्वाच्च न तन्निबन्धनमुच्चैष्ट्वं यजुर्वेदेन तु क्रियमाणत्वात्स्वरापेक्षणाच्च तदीयमुपांशुत्वमेव स्यात् ।

अत्र—भूयस्त्वेनोभयश्रुति । जै. ३ । ३ । ९

इत्यत्र कुतूहलवृत्तौ—

वार्त्तिकरीत्या विनियोगविधिवेदनिबन्धनत्वे तु ज्योतिष्टोमस्य याजुर्वेदिकत्वेऽपि तदङ्गमध्येषु तत्तद्वेदस्वरप्राप्तेस्तस्य याजुर्वेदिकत्वसाधने फलाभावात्सूत्रमिदमन्यत्र योज्यम् । तद्यथा । आधानमधिकृत्य सामवेदे श्रुतम् 'आतेऽग्नौ रथंतरं गायति' इत्यादि तथा यजुर्वेदे श्रुतम् 'रथंतरमभिगायते गार्हपत्य आधीयमाने' इत्यादि । तदेतदुभयश्रुति उभयत्र श्रूयमाणं साम भूयस्त्वेन विधिप्रतीतिपौष्कल्येन हेतुनान्यतरत्र विहितमिति निर्णेयम् । सामान्यस्वरूपस्यानवगमे हि तद्विनियोगविधिर्न संभवति । तत्स्वरूपावगमश्च सामवेद एवेति तत्रैव तद्विधिः । यजुर्वेदे 'रथंतरमभिगायते गार्हपत्य आधीयमाने' इत्यादि तु सामवेदविहितरथंतरानुवादेन कालान्तरविधिपरमिति न तत्र तद्विधिः । ततश्चाधानाङ्गरथंतरादिसामसूच्चैष्ट्वमेव । यस्य तु मन्त्रस्य वेदद्वयेऽपि समाम्नानम् । विनियोगविधिश्चान्यथा सिद्धस्तत्रागत्या विकल्पः ।

“उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामाभिगायति”

इतिश्रुतिवाक्यं शाबरभाष्ये १० । ८ । ९ जै. इत्यत्रोदाहृतम् ।

उपवादश्च तद्वत् । जै. १० । ८ । ९

सूत्रार्थः—उपवादः—उपवीतेति निन्दा तद्वत् । ग्रहणाग्रहणवत् ।

ब्रह्माग्न्याधेये सामानि गायति । आप. श्रौ. सू. ५ । ६ । १७

मीमांसा-शा. टी. अग्न्याधेये वारवन्त्यादिसामगानं विधाय श्रूयते—“न ब्रह्मा सामानि गायेत्” इति । तत्र संशयः—किमयं प्रतिषेधो नित्यं सामगानमुत प्रतिषेधार्थ-

दक्षिणतः पुरस्ताद्वितृतीयदेशे बार्हपत्यस्य नेदीयसि दक्षिणाग्नेरायतनम् । अन्यदाहवनीयागारमन्यद्गार्हपत्यस्य ।

अग्रेणाहवनीयं सभाया सभ्यः । तं पूर्वेणावसथ आवसथ्यः । आ. श्रौ. सू. ५ । ४ ३,। ५ । ६ । ७ । ८

वृत्तिः—अष्टासु प्रक्रमेषु अतीतेषु आहवनीयस्थानम् । एवं सर्वत्र गार्हपत्यस्य दाक्षिणतः पुरस्ताद्गार्हपत्याहवनीययोरन्तरालदेशस्य तृतीयोऽशो विगतो यस्माद्देशात्स तथोक्तः । समीपसप्तमी चेयं वितृतीयदेशस्य पश्चात्तोकान्तरे देश इत्यर्थः । उक्तं च शुल्बसूत्र आचार्येणैव गार्हपत्याहवनीययोरन्तरालमित्यादिना । गार्हपत्यागारात्पृथगेवाहवनीयस्याप्यागारं कर्तव्यमित्यर्थः । तयोरेवान्यतरत्र दक्षिणाग्न्यायतनम् ।

सभा द्यूतशाला तत्र सभ्योऽग्निराधेयस्ततश्च तत्रास्यायतनम् ।

आवसथः—अतिथीनां वासभूमि. ।

## साममीमांसा ।

रथंतरमभिगायते गार्हपत्य आधीयमाने ।
वामदेव्यमभिगायत उद्ध्रियमाणे ॥
बृहदभिगायत आहवनीय आधीयमाने ।

यद्वारवन्तीयमभिगायते । श्यैतेन श्येती कुरुते । तै. ब्रा. १ । १ । ८

गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ ९ ॥ जै. ३ । ३ । ९

सूत्रार्थ.—गुणमुख्यव्यतिक्रमे गुणः अङ्गम् । मुख्य प्रधानं तयोर्व्यतिक्रमे विरोधे तदर्थत्वात् प्रधानार्थत्वादङ्गस्य मुख्येन प्रधानेन सहाङ्गस्य वेदसंयोग संबन्धः ।

मथ्यमाने शक्तेः साकृतेः साम गायति धूमे जाते गाथिनः कौशिकस्य ।

. अरण्योर्निहितो जातवेदा इति च । आप. श्रौ. सू. ५ । १०
रथंतरे गीयमाने यज्ञायज्ञीये च । आप. श्रौ. सू. ५ । ११ । ६ ।
यज्ञायज्ञीये गीयमाने आप. श्रौ. सू. ५ । १३ । ८ ।
बृहति गीयमाने श्येतवारवन्तीययोर्यज्ञायज्ञीये च आप. श्रौ. सू. ५ । १५ । ६

तत्र मीमांसा—याजुर्वेदिकमाधानं तस्य सामवेदे वारवन्तीयं गायतीत्यङ्गविधि. । तत्र वारवन्तीयस्य किं सामवेदिकः स्वर उत याजुर्वेदिक इति संदेहः प्रधानविधिनिबन्धनस्य स्वरस्य प्रधानैकवाक्यतापेक्षित्वेन विलम्बितत्वात्स्ववेदनिबन्धन एव स्वरोऽनपेक्षतया शीघ्रं प्रतीयमानो युक्त इति प्राप्ते प्रधानधर्मत्वादुपांशुत्वमेव बलीयः । साङ्ग ह्याधानं विधिना निर्धीयते अतस्तादृशस्यैव याजुर्वेदिकत्वादुपांशुत्वं धर्म । न चाङ्गेष्वक्रियमाण

तत्साङ्गस्य कृतं भवति तेनाङ्गस्योऽप्यसौ प्रधानधर्म इति विलम्बितप्रतीतिरपि बलीयान् । इतरथा प्रधानस्यैव वैगुण्यापत्तेः । अतोऽङ्गधर्ममुच्चैष्ट्वं बाधित्वा प्रधानधर्म उपांशुत्व स्यादिति सिद्धान्तितम् । एवं ' तद्गुणविरोधे च तादर्थ्यात् ' इत्यनेन गतप्रायं स्यात् । न चोदाहरणमपि युक्तम् । वारवन्तीयं गायतीत्यस्याङ्गविधेरपि याजुर्वैदिकत्वादित्यन्यथा व्याख्यातम् । यस्य मन्त्रस्य वेदान्तरे समाम्नानमुत्पत्तिर्वेदान्तरे च विनियोगविधिस्तस्य किमुत्पत्तिवेदनिबन्धनः स्वरोऽथवा विनियोगवेदनिबन्धन इति संशयः । तत्र—' उत्पत्तेः पूर्वभावित्वात्तन्निबन्धन एव हि स्वरः प्रथमभावित्वाद्युक्तो नान्यो विलम्बितः ।' नैतदेवम् ' न सम्बाम्नानमात्रेण मन्त्रस्य स्यात्प्रयोज्यता । तेन क्रियत इत्येवमतो धर्तुं न शक्यते । तेन तु क्रियते मन्त्रो यत्र वेदे विधीयते । विध्यायत्तं ह्यनुष्ठानं तत्र चापेक्षितः स्वरः । ' प्रयोज्यत्वावधारितस्य मन्त्रस्य स्वरापेक्षा भवति न स्वरूपावगतिमात्रेण तस्माद्वारवन्तीयादेः सामवेदेनाक्रियमाणत्वादनपेक्षितत्वाच्च न तन्निबन्धनमुच्चैष्ट्वं यजुर्वेदेन तु क्रियमाणत्वात्स्वरापेक्षणाच्च तदीयमुपांशुत्वमेव स्यात् ।

अत्र—भूयस्त्वेनोभयश्रुति । जै. ३ । ३ । ९

इत्यत्र कुतूहलवृत्तौ—

वार्तिककारीया विनियोगविधिवेदनिबन्धनत्वे तु ज्योतिष्टोमस्य याजुर्वैदिकत्वेऽपि तदङ्गस्तोत्रेषु तत्तद्वेदस्वरप्राप्तेस्तस्य याजुर्वैदिकत्वसाधने फलाभावात्सूत्रमिदमन्यत्र योज्यम् । तद्यथा । आधानमधिकृत्य सामवेदे श्रुतम् 'जातेऽग्नौ रथंतरं गायति' इत्यादि तथा यजुर्वेदे श्रुतम् 'रथंतरमभिगायते गार्हपत्य आधीयमाने' इत्यादि । तदेतदुभयश्रुति उभयत्र श्रूयमाणं साम भूयस्त्वेन विधिप्रतीतिभौयस्त्वेन हेतुनान्यतरत्र विहितमिति निर्धार्यम् । सामान्यस्वरूपस्यानवगमे हि तद्विनियोगविधिर्न संभवति । तत्स्वरूपावगमश्च सामवेद एवेति तत्रैव तद्विधिः । यजुर्वेदे ' रथंतरमभिगायते गार्हपत्य आधीयमाने ' इत्यादि तु सामवेदविहितरथंतरानुवादेन कालान्तरविधिपरमिति न तत्र तद्विधिः । तत्राधानाङ्गरथंतरादिसाम्नामुच्चैष्ट्वमेव । यस्य तु मन्त्रस्य वेदद्वयेऽपि समाम्नानम् । विनियोगविधिश्चान्यथा सिद्धस्तत्रागत्या विकल्पः ।

" उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामाभिगायति "

इतिश्रुतिवाक्यं शाबरभाष्ये १० । ८ । ९ जै. इत्यत्रोदाहृतम् ।

उपवादश्च तद्वत् । जै. १० । ८ । ९

सूत्रार्थः—उपवादः—उपवीतेति निन्दा तद्वत् । ग्रहणाग्रहणवत् ।

ब्रह्माग्न्याधेये सामानि गायति । आप. श्रौ. सू. ४ । ६ । १७

मीमांसा-शा. दी. अग्न्याधेये वारवन्त्यादिसामगानं विधाय श्रूयते—" न ब्रह्मा सामानि गायेत् " इति । तत्र संशयः–किमयं प्रतिषेधो नित्यं सामगानमुत प्रतिषेधार्थ-

दक्षिणतः पुरस्ताद्वितृतीयदेशे गार्हपत्यस्य नेदीयसि दक्षिणाग्नेरायतनम् । अन्यदाहवनीयागारमन्यद्गार्हपत्यस्य ।

अग्रेणाहवनीयं सभाया सभ्यः । तं पूर्वेणावसथ आवसथ्यः । आ. श्रौ. सू. ९ । ३, । ५ । ६ । ७ । ८

वृत्ति —अष्टासु प्रक्रमेषु अतीतेषु आहवनीयस्थानम् । एवं सर्वत्र गार्हपत्यस्य दाक्षिणतः पुरस्ताद्गार्हपत्याहवनीययोरन्तरालदेशस्य तृतीयोंऽशो विगतो यस्माद्देशात्स तथोक्तः । समीपसप्तमी चेयं वितृतीयदेशस्य पश्चात्तोकान्तरे देश इत्यर्थः । उक्तं च शुल्बसूत्र आचार्येणैव गार्हपत्याहवनीययोरन्तरालमित्यादिना । गार्हपत्यागारात्पृथगेवाहवनीयस्याप्यागारं कर्तव्यमित्यर्थः । तयोरेवान्यतरत्र दक्षिणाग्न्यायतनम् ।

सभा द्यूतशाला तत्र सभ्योऽग्निराधेयस्ततश्च तत्रास्यायतनम् ।

आवसथः—अतिथीनां वासभूमिः ।

## साममीमांसा ।

रथंतरमभिगायते गार्हपत्य आधीयमाने ।
वामदेव्यमभिगायत उद्ध्रियमाणे ॥
बृहदभिगायत आहवनीय आधीयमाने ।

यद्वारवन्तीयमभिगायते । श्यैतेन श्येती कुरुते । तै. ब्रा. १ । १ । ८

गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ ९ ॥ जै. ३ । ३ । ९

सूत्रार्थः—गुणमुख्यव्यतिक्रमे गुणः अङ्गम् । मुख्य प्रधानं तयोर्व्यतिक्रमे विरोधे तदर्थत्वात् प्रधानार्थत्वादङ्गस्य मुख्येन प्रधानेन सहाङ्गस्य वेदसंयोग सबन्धः ।

मथ्यमाने शक्तेः साकृतेः साम गायति धूमे जाते गाथिनः कौशिकस्य ।

अरण्योर्निहितो जातवेदा इति च । आप. श्रौ. सू. ५ । १०
रथंतरे गीयमाने यज्ञायज्ञीये च । आप. श्रौ. सू. ५ । ११ । ६ ।
यज्ञायज्ञीये गीयमाने आप. श्रौ. सू. ५ । १३ । ८ ।
बृहति गीयमाने श्यैतवारवन्तीययोर्यज्ञायज्ञीये च आप. श्रौ. सू. ५ । १५ । ६

तत्र मीमासा—याजुर्वेदिकमाधानं तस्य सामवेदे वारवन्तीय गायतीत्यङ्गविधि. । तत्र वारवन्तीयस्य किं सामवेदिकः स्वर उत याजुर्वेदिक इति सदेहः प्रधानविधिनिबन्धनस्य स्वरस्य प्रधानैकवाक्यतापेक्षित्वेन विलम्बितत्वात्स्ववेदनिबन्धन एव स्वरोऽनपेक्षतया शीघ्रं प्रतीयमानो युक्त इति प्राप्ते प्रधानधर्मत्वादुपांशुत्वमेव बलीय । साङ्गं ह्याधानं विधिना विधीयते अतस्तादङ्गस्यैव याजुर्वेदिकत्वादुपांशुत्वं धर्म । न चाङ्गेष्वक्रियमाण

तत्साङ्गस्य कृतं भवति तेनाङ्गस्थोऽप्यसौ प्रधानधर्म इति विलम्बितप्रतीतिरपि बलीयान् । इतरथा प्रधानस्यैव वैगुण्यापत्तेः । अतोऽङ्गधर्ममुच्चैष्ट्वं बाधित्वा प्रधानधर्म उपांशुत्वं स्यादिति सिद्धान्तितम् । एवं 'तद्गुणविरोधे च तादर्थ्यात्' इत्यनेन गतप्रायं स्यात् । न चोदाहरणमपि युक्तम् । वारवन्तीयं गायतीत्यस्याङ्गविधेरपि याजुर्वेदिकत्वादित्यन्यथा व्याख्यातम् । यस्य मन्त्रस्य वेदान्तरे समाम्नानमुत्पत्तिर्वेदान्तरे च विनियोगविधिस्तस्य किमुत्पत्तिवेदनिबन्धनः स्वरोऽथवा विनियोगवेदनिबन्धन इति संशय । तत्र—'उत्पत्तेः पूर्वभावित्वात्तन्निबन्धन एव हि स्वरः प्रथममावित्याद्युक्तो नान्यो विलम्बितः ।' नैतदेवम् 'न स्वाम्नानमात्रेण मन्त्रस्य स्यात्प्रयोज्यता । तेन क्रियत इत्येवमतो वक्तुं न शक्यते । तेन तु क्रियते मन्त्रो यत्र वेदे विधीयते । विध्यायत्तं ह्यनुष्ठानं तत्र चापेक्षितः स्वरः ।' प्रयोज्यतयावधारितस्य मन्त्रस्य स्वरापेक्षा भवति न स्वरूपावगतिमात्रेण तस्माद्वारवन्तीयादेः सामवेदेनाक्रियमाणत्वादनपेक्षितत्वाच्च न तन्निबन्धनमुच्चैष्ट्वं यजुर्वेदेन तु क्रियमाणत्वात्स्वरापेक्षणाच्च तदीयमुपांशुत्वमेव स्यात् ।

अत्र—भूयस्त्वेनोभयश्रुति । जै. ३ । १ । ९

इत्यत्र कुतूहलवृत्तौ—

वार्तिककारीया विनियोगविधिवेदनिबन्धनत्वे तु ज्योतिष्टोमस्य याजुर्वेदिकत्वेऽपि तदङ्गमन्त्रेषु तत्तद्वेदस्वरप्राप्तिस्तस्य याजुर्वेदिकत्वसाधने फलाभावात्सूत्रमिदमन्यत्र योज्यम् । तद्यथा । आधानमधिकृत्य सामवेदे श्रुतम् 'जातेऽग्नौ रथंतरं गायति' इत्यादि तथा यजुर्वेदे श्रुतम् 'रथंतरमभिगायते गार्हपत्य आधीयमाने' इत्यादि । तदेतदुभयश्रुति उभयत्र श्रूयमाणं साम भूयस्त्वेन विधिप्रतीतिपौष्कल्येन हेतुनान्यतरत्र विहितमिति निर्धार्यम् । सामान्यस्वरूपस्यानवगमे हि तद्विनियोगविधिर्न सम्भवति । तत्स्वरूपावगमश्च सामवेद एवेति तत्रैव तद्विधिः । यजुर्वेदे 'रथंतरमभिगायते गार्हपत्य आधीयमाने' इत्यादि तु सामवेदविहितरथंतरानुवादेन कालान्तरविधिपरमिति न तत्र तद्विधि । ततश्चाधानाङ्गरथंतरादिसामस्वौच्चैष्ट्वमेव । यस्य तु मन्त्रस्य वेदद्वयेऽपि समाम्नानम् । विनियोगविधित्वान्यथा सिद्धस्तत्रागत्या विकल्प. ।

"उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामाभिगायति"।

इतिश्रुतिवाक्यं शाबरभाष्ये १० । ८ । ९ जै. इत्यत्रोदाहृतम् ।

उपवादश्च तद्वत् । जै. १० । ८ । ९

सूत्रार्थः—उपवाद —उपवीतेति निन्दा तद्वत् । ग्रहणाग्रहणवत् ।

ब्रह्माग्न्याधेये सामानि गायति । आप. श्रौ. सू. ४ । ६ । १७

मीमांसा-शा. दी. अग्न्याधेये वारवन्त्यादिसामगानं विधाय श्रूयते—"न ब्रह्मा सामानि गायेत्" इति । तत्र संशयः—किमयं प्रतिषेधो नित्यं सामगानमुत प्रतिषेधार्थ-

दक्षिणतः पुरस्ताद्वितृतीयदेशे गार्हपत्यस्य नेदीयसि दक्षिणाग्नेरायतनम् । अन्यदाहवनीयागारमन्यद्गार्हपत्यस्य ।

अग्रेणाहवनीयं सभायां सभ्यः । तं पूर्वेणावसथ आवसथ्यः । आ. श्रौ. सू. ५ । ४ ३,। ५ । ६ । ७ । ८

वृत्तिः—अग्न्यसु प्रक्रमेषु अतीतेषु आहवनीयस्थानम् । एवं सर्वत्र गार्हपत्यस्य दाक्षिणतः पुरस्ताद्गार्हपत्याहवनीययोरन्तराळदेशस्य तृतीयोऽशो विगतो यस्माद्देशात्स तथोक्तः । समीपसप्तमी चेयं वितृतीयदेशस्य पश्चात्त्तोकान्तरे देश इत्यर्थः । उक्तं च शुल्वसूत्र आचार्येणैव गार्हपत्याहवनीययोरन्तराळमित्यादिना । गार्हपत्यागारात्पृथगेवाहवनीयस्यागारं कर्तव्यमित्यर्थः । तयोरेवान्यतरत्र दक्षिणाग्न्यायतनम् ।

सभा द्यूतशाला तत्र सभ्योऽग्निराधेयस्ततश्च तत्रायतनम् ।

आवसथः—अतिथीनां वासभूमिः ।

## साममीमांसा ।

रथंतरमभिगायते गार्हपत्य आधीयमाने ।
वामदेव्यमभिगायत उद्ध्रियमाणे ॥
बृहदभिगायत आहवनीय आधीयमाने ।

यद्वारवन्तीयमभिगायते । श्यैतेन श्येती कुरुते । तै. ब्रा. १ । १ । ८

गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसयोगः ॥ ९ ॥ जै. ३ । ३ । ९

सूत्रार्थः—गुणमुख्यव्यतिक्रमे गुणः अङ्गम् । मुख्यं प्रधानं तयोर्व्यतिक्रमे विरोधे तदर्थत्वात् प्रधानार्थत्वादङ्गस्य मुख्येन प्रधानेन सहाङ्गस्य वेदसंयोगः संबन्धः ।

मथ्यमाने शक्तेः साकृतेः साम गायति धूमे जाते गाथिनः कौशिकस्य ।

अरण्योर्निहितो जातवेदा इति च । आप. श्रौ. सू. ५ । १०
रथंतरे गीयमाने यज्ञायज्ञीये च । आप. श्रौ. सू. ५ । ११ । ६ ।
यज्ञायज्ञीये गीयमाने आप. श्रौ. सू. ५ । १३ । ८ ।
बृहति गीयमाने श्यैतवारवन्तीययोर्यज्ञायज्ञीये च आप. श्रौ. सू. ५ । १५ । ६

तत्र मीमांसा—याजुर्वेदिकमाधानं तस्य सामवेदे वारवन्तीयं गायतीत्यङ्गविधिः । तत्र वारवन्तीयस्य किं सामवेदिकः स्वर उत याजुर्वेदिक इति संदेहः प्रधानविधिनिबन्धनस्य स्वरस्य प्रधानैकवाक्यतापेक्षित्वेन विलम्बितत्वात्स्ववेदनिबन्धन एव स्वरोऽनपेक्षतया शीघ्रं प्रतीयमानो युक्त इति प्राप्ते प्रधानधर्मत्वादुपांशुत्वमेव बलीयः । साङ्गं ह्याधानं विधिना विधीयते अतस्तदशस्यैव याजुर्वेदिकत्वादुपांशुत्वं धर्मः । न चाङ्गेष्वक्रियमाणं

तत्साङ्गस्य कृतं भवति तेनाङ्गस्थोऽप्यसौ प्रधानधर्म इति विलम्बितप्रतीतिरपि बलीयान् । इतरथा प्रधानस्यैव वैगुण्यापत्तेः । अतोऽङ्गधर्ममुल्लङ्घ्य बाधित्वा प्रधानधर्म उपांशुत्व स्यादिति सिद्धान्तितम् । एवं ' त्वंगुणविरोधे च तादर्थ्यात् ' इत्यनेन गतप्रायं स्यात् । न चोदाहरणमपि युक्तम् । वारवन्तीयं गायतीत्यस्याङ्गविधेरपि याजुर्वैदिकत्वादित्यन्यथा व्याख्यातम् । यस्य मन्त्रस्य वेदान्तरे समाम्नानमुत्पत्तिर्वेदान्तरे च विनियोगविधिस्तस्य किमुत्पत्तिवेदनिबन्धनः स्वरोऽथवा विनियोगवेदनिबन्धन इति संशयः । तत्र—' उत्पत्तेः पूर्वभावित्वात्तन्निबन्धन एव हि स्वरः प्रथमभावित्वाद्युक्तो नान्यो विलम्बितः ।' नैतदेवम् ' न खल्वाम्नानमात्रेण मन्त्रस्य स्यात्प्रयोज्यता । तेन क्रियत इत्येवमतो वक्तुं न शक्यते । येन तु क्रियते मन्त्रो यत्र वेदे विधीयते । विध्यायत्तं ह्यनुष्ठानं तत्र चापेक्षितः स्वरः ।' प्रयोज्यतयावधारितस्य मन्त्रस्य स्वरापेक्षा भवति न स्वरूपावगतिमात्रेण तस्माद्वारवन्तीयादेः सामवेदेनाक्रियमाणत्वादनपेक्षितत्वाच्च न तन्निबन्धनमुच्चैष्ट्वं यजुर्वेदेन तु क्रियमाणत्वात्स्वरापेक्षणाच्च तदीयमुपांशुत्वमेव स्यात् ।

अत्र—भूयस्त्वेनोभयश्रुति । जै. ३ । ३ । ९

इत्यत्र कुतूहलवृत्ती—

वार्तिककारीया विनियोगविधिवेदनिबन्धनत्वे तु ज्योतिष्टोमस्य याजुर्वैदिकत्वेऽपि तदङ्गस्तोत्रेषु तत्तद्वेदस्वरप्राप्तेस्तस्य याजुर्वैदिकत्वसाधने फलाभावात्सूत्रमिदमन्यत्र योज्यम् । तद्यथा । आधानमधिकृत्य सामवेदे श्रुतम् 'जातेऽग्नौ रथंतरं गायति' इत्यादि तथा यजुर्वेदे श्रुतम् 'रथंतरमभिगायते गार्हपत्य आधीयमाने' इत्यादि । तदेतदुभयश्रुति उभयत्र श्रूयमाणं साम भूयस्त्वेन विधिप्रतीतिपौष्कल्येन हेतुनान्यतरत्र विहितमिति निर्धार्यम् । सामान्यस्वरूपस्यानवगमे हि तद्विनियोगविधिर्न संभवति । तत्स्वरूपावगमश्च सामवेद एवेति तत्रैव तद्विधिः । यजुर्वेदे 'रथंतरमभिगायते गार्हपत्य आधीयमाने' इत्यादि तु सामवेदविहितरथंतरानुवादेन कालान्तरविधिपरमिति न तत्र तद्विधिः । ततश्चाधानाङ्गरथंतरादिसामसूच्चैष्ट्वमेव । यस्य तु मन्त्रस्य वेदद्वयेऽपि समाम्नानम् । विनियोगविधिश्चानन्यथासिद्धस्तत्रागत्या विकल्प. ।

" उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामाभिगायति "

इतिश्रुतिवाक्यं शाबरभाष्ये १० । ८ । ९ जै. इत्यत्रोदाहृतम् ।

उपवादश्च तद्वत् । जै. १० । ८ । ९

सूत्रार्थः— उपवादः—उपवीतेति निन्दा तद्वत् । ग्रहणाग्रहणवत् ।

ब्रह्माग्न्याधेये सामानि गायति । आप. श्रौ. सू. ४ । ६ । १७

मीमांसा-शा. दी. अग्न्याधेये वारवन्त्यादिसामगानं विधाय श्रूयते—" न ब्रह्मा सामानि गायेत् " इति । तत्र संशयः—किमयं प्रतिषेधो नित्यं सामगानस्य प्रतिषेधार्थः

# आधानपद्धतेः शुद्धिपत्रम् ।

### प्रस्तावना ।

| पृष्ठम् | पङ्क्ति. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | २३ | पिण्डः | पिण्डं |

### आपस्तम्बसूत्रम् ।

| पृष्ठम् | पङ्क्ति. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १९ | द्वुरिति | द्वुरिति |
| ५ | ५ | बिभयो | बिभृयो |
| ७ | १ | तेनयाय | तनयाय |
| १० | ८ | मद्दो | मदे |
| १० (टिप्पण्यां)२ | | एमु | एवमु |
| ११ | १५ | निर्वपेव | निर्वपेत् |
| १२ | २७ | परधीत | परन्धीते |
| १३ | १ | ददत्त दधीत | ददतदधीत |

### आधानसंभारपट्टिका ।

| पृष्ठम् | पङ्क्ति. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | ९ | गोः | गौ |

### इष्टिद्वयम् ।

| पृष्ठम् | पङ्क्ति. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३१ | २ | निर्वापाणां | निर्वाप्याणाम |

### आ. प्र. मन्त्रभाष्यम् ।

| पृष्ठम् | पङ्क्ति. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | २३ | स्वी-करोमि | स्वीकरोमि |

### आधानमीमांसा ।

| पृष्ठम् | पङ्क्ति. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ३ | शारदि | शरद् |
| २ | ५ | द्वि ति | द्विति |
| २ | १८ | ० | व |
| ४ | ७ | पञ्छन्दाय | सप्तछन्दाय |
| ७ | ५ | नक्षत्रान्तर | नक्षत्रान्तरं |
| ७ | २३ | वसना | भसाना |

समाप्तमिदं शुद्धिपत्रम् ।

---

१ यत्र यत्र दक्षिणादानप्रस्तावे निष्कद्रव्यमित्युक्तेऽपि तत्र तत्तद्द्रव्य दानसंकल्पऊ-हार्य यथा-अश्वतरीनिष्क्रयद्रव्यं ते दास्य इत्यत्र अश्वतरीं ते दास्य इति एवं सर्वत्र ।